కృత్వా పూజాం యథాశక్తి వస్త్రాలంకారభూషణైః ।
ముచ్యతే క్షేత్రమాహాత్మ్యాత్ వైకుంఠప్రియ దర్శనాత్ ॥

భూలోకవైకుంఠమిదం పురాతనం
సమస్త పాపౌఘ నివారణంచ ।
అన్నోదకానాం న చ సంప్రదానాత్
కదాచి దప్రత్య ఫలం సమంచ ॥ 72

అన్నం జలం వస్త్రమహీప్రదానం
గవాంప్రదానం చనధాన్యదానం ।
పాత్రే విశేషేణ చ దానసిద్ధి
ర్భవిష్యతి బ్రాహ్మణ పుంగవేషు ॥ 73

యే కేచనాత్ర కుర్వంతి దేవకైంకర్యమత్రతు ।
స్వవిత్తస్యాను సారేణ సర్వసంపత్సమృద్ధయే ॥ 74

శ్రీ గోపదేవరాజస్య మహాత్వంచ ప్రయాంతి చ ।
సకోటికుల సంయుక్తః పదం ప్రాప్నోతివైష్ణవం ॥ 75

ధనుర్మాసే మాఘమాసే కార్తికీ చ తథైవ చ ।
మహాపూజాంచ కృత్వాచ సోఽనంతఫలమశ్నుతే ॥ 76

పణం పణద్వయంగాపి కాచమాత్రమథాపి వా ।
దదాతి దేవపాదే చ బలీ రూపీ హరేర్దినే ॥ 77

ద్వాదశ్యాం వా విశేషేణ సారూప్యం లభతే నరః ।
యద్యదిష్టతమం వస్తు పితౄనుద్దిశ్య యోఽర్చయేత్ ॥ 78

పితర_స్తస్య వై_కుంఠే వసంతి హి న సంశయః ।
ఏవం బ్రహ్మా నారదాయ స తు మద్గురవేర్పయేత్ ॥ 79

గురుర్మమ శుకాయాదాత్సోహం యుష్మాకమత్రతు ।
ప్రో_క్తవాన్ వై_భవం సర్వం సూర్యం శిష్యేభ్య ఏవ చ॥ 0

వదధ్వం సర్వలోకానాం పారంపర్యక్రమేణ చ ।
పురాణ మేతదాద్యంతం శ్లోకం శ్లోకార్థమేవ వా ॥ 81

లిఖిత్వా పూజయేద్యస్తు గంధపుష్పాదిభిర్నరః ।
తన్మందిరంచ వై_కుంఠం శ్వేతద్వీపంచ వై_ష్ణవం ॥ 82

మథురా ద్వారకా చేతి వక్ష్యంతే బ్రహ్మవాదినః ।
బహునాత్ర కిము_క్తేన వయం యూయం సుమేధసః ॥ 83

అనంతః సుఖయుక్తాశ్చ భవేయు హరివల్లభాః ॥ 84

ఇతి శ్రీబ్రహ్మాండ పురాణే విష్ణుక్షేత్ర ఖండే
ఉ_త్తరభాగే చంపకారణ్యమహాత్మ్యే
హరిద్రానదీ మాఘస్నానాను
వర్ణనం నామాష్టషష్టిత
మోఽధ్యాయః.

॥ श्रीगणेशाय नमः ॥

# ॥ चम्पकारण्यमाहात्म्यम् ॥



श्री शौनक :—

सूत सर्वज्ञ भगवन्पुराणार्थविशारद ।
त्वया खलु पुराणानि सेतिहासानि कृत्स्नशः ॥१॥
पठितानि मुनीनाञ्च सन्निधौ बहुशो मुने ।
वेदव्यासस्य कृपया सरहस्यानि नैमिशे ॥२॥
आदिमब्रह्मणः कल्पे विष्णोरद्भुतकर्मणः ।
स्थानानि जम्बुद्विपे च अन्यद्वीपेषु चैव हि ॥३॥
अष्टोत्तरशतानीति वैकुण्ठसदृशानि च ।
तेषां मध्ये विशेषेण कथितान्यष्टषष्टि वै ॥४॥
चतुर्विंशति तन्मध्ये कथितानि विशेषतः ।
तन्मध्येऽष्ट विशेषेण प्रोक्तं वैष्णवमुत्तमम् ॥५॥
एतेषां वैभवं सर्वं सूतं च भवता पुरा ।
इदानीमत्र वक्तव्यमस्माकं मुनिसन्निधौ ॥६॥
दक्षिणद्वारकायाश्च वैभवं सङ्ग्रहाच्छ्रुतम् ।
वदस्व विस्तरेणाद्य कृपासार कृपानिधे ॥७॥
त्वया च पाविता लोका राजानो मुनयोऽपि च ।
अस्मद्भाग्यवशादेव सत्रमध्ये च नैमिशे ॥८॥
प्राप्तवाँल्लोकपूज्यस्त्वं व्यासवद्विगतस्पृहः ।
त्वद्दर्शनेन सर्वत्र मुक्ता यास्यान्ति मानवाः ॥९॥

त्वत्समो नास्ति लोकेऽस्मिन्परोपकरणे रतः ।
परोपकारशीलानां संपदश्च पदे पदे ॥१०॥

त्वन्मुखाम्भोजसंभूतं श्रीमद्विष्णुकथामृतम् ।
पिबन्ति ये मुनीन्द्राश्च ते वै धन्या भवन्ति च ॥११॥

न शृण्वान्ति कथां ये वै भस्त्रिकासदृशाश्च ते ।
ते धन्याः कर्मभूमौ ये श्रीमद्विष्णुकथां मुहुः ॥१२॥

शृण्वन्त्यष्टाङ्गया भक्त्या आनन्दाश्रुविभूषिताः ।
तेषाञ्च दर्शनादेव प्रसन्नश्श्रीपतिर्भवेत् ॥१३॥

त्वद्दर्शनेन धन्यानां किमलभ्यं जगत्त्रये ।
बहुनात्र प्रलापेन त्वत्कृपा वर्धतां मयि ॥१४॥

श्री सूत उवाच :—

त्वत्सन्निधौ समग्रेण श्रीमद्विष्णुकथाश्शुभाः ।
वक्तुञ्च पात्रतां यातो गुरोः स्वकृपया द्विज ॥१॥

एतस्मादधिकं किं वा भाग्यमन्यद्भविष्यति ।
सर्वज्ञ त्वं विशेषेण मां पूजयसि चाक्षवत् ॥१६॥

तत्सर्वं मद्गुरोः पूजा स तु नारायणांशजः ।
मन्मस्तके पादपद्मं न्यस्तवान्कृपया गुरुः ॥१७॥

तद्बलेन कथां वक्ष्ये शृणुध्वं बुद्धिपूर्वकम् ।
शृण्वतां पठताञ्चापि विष्णुसायुज्यमस्ति वै ॥१८॥

ब्रह्मकुण्डं समारभ्य यावत्सिन्धुसमागमः ।
तस्माज्जलेलिहो लोके न पुनर्जायते भुवि ॥१९॥

स्पृष्ट्वा च सह्यजातोयं वातो वाति च यत्र च ।
तस्य स्पर्शनमात्रेण मुच्यते महतोंऽहसः ॥२०॥

तस्याश्च महिमा वक्तुं शेषेणापि न शक्यते ।
न तिथिर्न च नक्षत्रं न योगकरणानि च ॥२१॥

न मन्त्रो न च सङ्कल्पो न च स्मरणमेव च ।
कावेर्यां मौसलं स्नानं महापातकनाशनम् ॥२२॥

एतादृशायाः कावेर्यास्तीरयोरुभयोरपि ।
विष्णुस्थानानि कतिचित्सन्ति पुण्यतमानि च ॥२३॥

बदरीवने च श्रीरङ्गे देवः पूर्वमुखस्थितः ।
शेषपर्यङ्कशयनस्सगणैः परिवारितः ॥२४॥

तत्पूर्वे पिप्पलारण्ये तथैव परिसंस्थितः ।
तथा कावेरिमध्ये च चन्द्रपुष्करणीतटे ॥२॥

विभीषणेन चानीतो दक्षिणाभिमुखस्थितः ।
कावेर्या उत्तरे तीरे वेदनारायणस्थले ॥२६॥

तथा पूर्वमुखो भूत्वा प्रह्लादपरिपूजितः ।
वर्वते सन्निधानेन कुशतीर्थस्य दक्षिणे ॥२७॥

तत्पूर्वे पुण्डरीकाक्षः श्वेताद्रौ भक्तवत्सलः ।
व्यासाद्यैस्सेवितो नित्यं प्रह्लादादिभिरेव च ॥२८॥

वर्तते सन्निधानेन कुशतीर्थस्य दक्षिणे ।
योजनत्रितयान्ते च कावेर्या दक्षिणे तटे ॥२९॥

हेमपुष्करिणीतीरे लक्ष्म्या च परिसेवितः ।
अपर्याप्तामृताख्यश्च भक्तरक्षणदीक्षितः ॥३०॥

वर्तते कुम्भघोणे च भोगमोक्षप्रदायकः ।
तस्य चाग्नेयदिग्भागे योजनद्वितयान्तरे ॥३१॥

श्रीचम्पकवनं नाम प्रसिद्धं भुवनत्रये ।
अमृतोद्भवबीजेभ्यस्समुत्पन्नं वनं शुभम् ॥३२॥

नानापक्षिसमाकीर्णं नानामृगनिषेवितम् ।
नानामृगगणाकीर्णं निर्भरं लोकपूजितम् ॥३३॥

मुनयस्तत्र तिष्ठन्ति जितक्रोधा जितेन्द्रियाः ।
अग्निहोत्रपराश्शान्ताः सर्वे द्वन्द्वविवर्जिताः ॥३४॥

वेदपारायणरता वैष्णवा विष्णुतत्पराः ।
कर्माणि कृत्वा कालेषु तेऽर्पयन्ति च विष्णवे ॥३५॥

अष्टोत्तरसहस्रञ्च मुनयस्तत्र संस्थिताः ।
तत्र वह्निमुखो नाम मुनिरास्ते तपोधनः ॥३६॥

तस्य पुत्रद्वयञ्चास्ति तौ च विष्णुपरायणौ ।
ज्येष्ठो गोप्रलयो नाम कनिष्ठो गोभिलाह्वयः ॥३७॥

अर्पयन्तौ च कर्माणि मनोवाक्कायकर्मभिः ।
तयोर्गोप्रलयश्श्रेष्ठस्तपसा विद्यया तथा ॥३८॥

भक्त्या च पूजया नित्यं ध्यानयोगविशेषतः ।
तदा गोप्रलयो विद्वान्देवस्य प्रीतिमावहन् ॥३९॥

कदा(चिदुग्रं)तप आस्थितश्च
ध्यात्वा हृदि स्वे भगवन्तमाद्यम् ।
पञ्चाग्निमध्यस्थित एव सम्य
वल्लीकृष्णपादाम्बुजभक्तिसंयुतः ॥४०॥

ध्यानेन तुष्टश्च तदा हरिस्स्वयं
प्रसन्नतामाप मुनेश्च तत्र तु ।
स्पृशन्कराग्रेण च भक्तवत्सलो
स्वं धाम भासा च विभासयन्मुनिम् ॥४१॥

स विप्र उन्मील्य विलोचनद्वयं
ददर्श देवञ्च तपोबलेन ।

श्रीशार्ङ्गचक्रासिगदाधराढ्यं
माभूसमेतं महनीयतेजसम् ॥४२॥
तुष्टाव भक्त्या गुणकर्मवर्जितं
परात्परं कञ्जनेत्रमन्तिके ।

गोपलय :—

अहो धन्योऽस्मि भगवान्मया दृष्टो यतोऽत्र तु ।
त्वत्पादपद्मप्रणतं पाहि पाहि कृपानिधे ॥४३॥
नमो वेदान्तविज्ञानदिव्यमूर्तिधराच्युत ।
गोविन्द गोपवृन्दैश्च सनकाद्यैश्च सेवित ॥४४॥
गोपैश्च गोपिकाभिश्च गोभिश्चैव समन्वित ।
ममानुग्रहणार्थाय सन्निधत्स्व रमापते ॥४५॥
अखण्डसच्चिदानन्दब्रह्मणे परमात्मने ।
कालत्रयनिवृत्ताय कालातीताय ते नमः ॥४६॥
परात्परतरश्चैव तत्पराच्चैव यत्परम् ।
अप्रतर्क्यमनिर्देश्यं तं वन्दे लोकसाक्षिणम् ॥४७॥
अज्ञानिनाञ्च मूढानां अविद्यामोहितात्मनाम् ।
अचिन्तनीयरूपाढ्यं तं वन्दे परमेष्ठिनम् ॥४८॥
अपरिच्छिन्नमद्वैत मवाङ्मानसगोचरम् ।
निर्गुणं निर्मलं नित्यं तं वन्दे मत्स्यरूपिणम् ॥४९॥
अनाधारमनाकारमाधारं सर्वदेहिनाम् ।
लोकरक्षाकरं साक्षात्तं वन्दे कमठाकृतिम् ॥५०॥
लोकपीडाकराणाञ्च रक्षसां भयवर्धनम् ।
नरसिंहाकृतिं विष्णुं तं वन्दे लोकरक्षणम् ॥५१॥
भूमेरुद्धरणार्थाय कृतवाराहरूपिणम् ।
बलियज्ञविघाताय छलवामनरूपिणम ॥५२॥

त्रिपदाक्रान्तलोकाण्डं वन्देऽहं कश्यपात्मजम् ।
कार्तवीर्यापराधेन जनितक्रोधमुत्कटम् ॥५३॥

जामदग्निमहं वन्दे लोकान्निःक्षत्रियीकृतम् ।
रावणस्य वधार्थाय देवैरभ्यर्थितो हरिः ॥५४॥

रामावतारं कृतवान्वन्देऽहं जानकीपतिम् ।
रेवतीरमणं रामं नीलाम्बरधरं विभुम् ॥५५॥

प्रलम्बासुरदर्पघ्नं तं वन्दे बलनामकम् ।
मातुलं कंसनामानं लोककण्टककारिणम् ॥५६॥

हतवाँल्लोकरक्षार्थं तं वन्दे कृष्णरूपिणम् ।
कल्किनं लोकसंहारकारिणं प्रलयान्तरे ॥५७॥

उत्पत्तिप्रलयातीतं तं वन्दे प्रलयाकृतिम् ।
केशवाय नमस्तुभ्यं वरेण्याय महात्मने ॥५८॥

आदिमध्यान्तशून्याय जगन्नाथाय विष्णवे ।
अपराधसहस्रं मे क्षमस्व परमेश्वर ॥५९॥

भूयो भूयो नमस्तुभ्यं भूयो भूयो नमस्सदा ।

ी सूत उवाच ॥

इति स्तुत्वा जगन्नाथं दण्डवत्प्रणनामह ॥६०॥

देवोऽथ तस्य स्तोत्रेण तपसा पूजया तथा ।
यज्ञेन दानपुण्येन प्रत्यक्षं समजायत ॥६१॥

चतुर्भुजः पीतवासा वनमालाविराजितः ।
पीताम्बरधरश्श्यामः कालमेघनिभच्छविः ॥६२॥

वरं प्रदातुं भक्ताय मेघगम्भीरया गिरा ।
स उवाच तमुत्थाप्य वरयस्व वरं त्विति ॥६३॥

गोप्रलयस्तु विप्रोऽसौ दृष्ट्वा देवं रमापतिम् ।
सन्तुष्टचित्तः प्रोवाच वरदञ्च रमापतिम् ॥६४॥

गोप्रलय उवाच ॥

अहो धन्योऽस्मि भगवँल्लोकानुग्रहकारण ।
वरदोऽसि यदि त्वञ्च वस चम्पककानने ॥६५॥
मया कृतस्य तीर्थस्य वायव्ये बाणपातने ।
विष्वक्सेनप्रभृतिभिस्स्वकीयैः परिवारित. ॥६६॥
मार्कण्डेयादिमुनिभिः प्रह्वप्रलयवर्जितैः ।
भक्तैः प्रह्लादमुख्यैश्च गोपालैः परिवारितः ॥६७॥
गोपवेषधरो भूत्वा रमणीयेऽत्र कानने ।
चारयन्गोकुलं सर्वं गोपो दण्डधरस्स्वयम् ॥६८॥
त्रिनतं चाग्रभागञ्च दत्तं चैव स्वकर्मणा ।
गोवर्धनधृतेः काले लोकरक्षाविधौ विभो ॥६९॥
यदि मे भक्तिवश्योऽसि मुनीनां वरदो भव ।
त्वन्नेत्रवीक्षिते देशे तीर्थञ्च क्रियतां हरे ॥७०॥
श्रीकृष्णाख्यं महातीर्थं तद्भवेल्लोकविश्रुतम् ।
गोपाङ्गनाभिस्सततं क्रीडार्थंतीर्थमावह ॥७१॥
तत्तीर्थं लोकविख्यातं भविष्यति हरे विभो ।
तासाङ्कुङ्कुमगन्धेन हरिद्रालेपनेन च ॥७२॥
हरिद्राख्या नदी चेति प्रसिद्धिमभियास्यति ।
गोभिलेन कृतं तीर्थं विमानस्य च पश्चिमे ॥७३॥
बाणपातप्रमाणे च विष्णुपुष्करिणीति च ।
त्वदीयवरदानेन सर्वदा पापहारिणी ॥७४॥
भविष्यति कृपायोगाद्दिव्यज्ञानप्रदायिनी ।
दत्वा वरान्सन्निधत्स्व द्वारकाञ्च विहाय च ॥७५॥

दक्षिणद्वारका चेति नाम कृत्वा स्थलस्य च ।
लोके प्रसिद्धं कृत्वा च सर्वेषां पापशान्तये ॥७६॥
सन्त्यत्र मुनिभिश्चात्र कृतानि सुबहूनि च ।
तीर्थानि दिक्षु सर्वत्र तपोबरसमन्वितैः ॥७७॥
तेषामपि वरं दत्वा प्रसन्नो वा समाचर ।
प्रार्थनां पूरय विभो भक्तवश्यतयात्र तु ॥७८॥

श्री सूत :—

इत्युक्तो मुनिना तेन लक्ष्मीकान्तस्स्वयं हरिः ।
तथास्त्विति वरं दत्वा तत्रैव परिसंस्थितः ॥ ७९॥
स्वकीयपार्षदगणैस्सनकाद्यैश्च योगिभिः ।
स्वयं गोपलयाख्यस्य तुष्ट्यर्थं गोकुलान्यपि ॥८०॥
आनीय दूतवर्गैश्च द्वारकावासिनोऽपि च ।
वृक्षगुल्मलतोद्यानवापीकूपादिकान्यपि ॥८१॥
यथायोग्यं प्रतिष्ठाप्य परितो योजनान्तरे ।
दक्षिणद्वारका चेयं पुरी चम्पकशोभिता ॥८२॥
इति होवाच भगवान्गोप्रलयमुनिभक्तितः ।
तदाप्रभृति तत्क्षेत्रं दक्षिणद्वारका ह्यभूत् ॥८३॥
तयोरपि च मन्त्रौ द्वौ स्वयमेव जगत्पतिः ।
द्रुपदस्य यथान्याय्यं कृतार्थौ च चकारह ॥८४॥
भगवान्स्वयमेवात्र समागत इति प्रथा ।
तेन स्वयंभवमिदं विमानं क्षेत्रमुत्तमम् ॥८५॥
वैष्णवानाञ्च सर्वेषां स्थानमेतदनुत्तमम् ।
श्रीरङ्गं बदरीषण्डं वैकुण्ठं वेङ्कटाचलम् ॥८६॥
पुण्यकोटिविमानञ्च तथा श्रीनगराह्वयम् ।
महोबिलं विशालञ्च पलाशवनमेव च ॥८७॥

एतानि पुण्यक्षेत्राणि मन्त्रसिद्धिकराणि च ।
देवोऽपि पूर्णकलया वर्तते भक्तवश्यतः ॥८८॥
दक्षिणद्वारकाख्यानमेतत्पुण्यमनुत्तमम ।
ये पठन्ति च शृण्वन्ति ते वै भागवतोत्तमाः ॥८९॥
तेषां प्रसन्नो भगवान्वैकुण्ठं दास्यति ध्रुवम् ।
अस्य क्षेत्रस्य माहात्म्मस्याख्यापि च न विद्यते ॥९०॥
माहात्म्यं भगवान्वेत्ति भक्तस्य वरदो हरिः ।
मुनिर्गोपिलयो ह्यत्र सदाचारपरायणः ॥९१॥
जपन्नष्टाक्षरं मन्त्रं द्वादशाक्षरमेव च ।
अग्निहोत्रं सदा कुर्वन्स्वतीर्थतट एव च ॥९२॥
निवासमकरोद्भक्त्या यावद्देहान्तमेव च ।
सायुज्यं प्राप्तवान्यश्च श्रीकृष्णवरदानतः ॥९३॥

इति श्रीब्रह्माण्डपुराणे विष्णुक्षेत्रखण्डे

उत्तर भागे चम्पकारण्यमाहात्म्यं

नाम एकषष्टितमोऽध्यायः ॥

---

## ॥ अथ द्विषष्टितमोऽध्यायः ॥

श्री शौनक उवाच :—

व्यासशिष्य महाभाग सर्वज्ञ करुणानिधे ।
किञ्चित्संशयमस्माकं हृदये वर्ततेऽधुना ॥१॥
तत्पृच्छमो वदास्माकं त्वमेव गतिरद्य वै ।
कोऽपि लोके न जानाति संशयछेदहेतवे ॥२॥
आदिमब्रह्मणः कल्पे ब्रह्मणस्तपसाह्वयम् ।
अत्रागत्य ब्रह्मणश्च वरं दत्वात्र संस्थितः ॥३॥
इति श्रुतश्चादिमकल्पे पुनरन्यच्च वै श्रुतम् ।
लक्ष्म्याश्च तपसो योगादागातो भगवानिति ॥४॥

सूत उवाच :—

शृणु शौनक वक्ष्यामि संशयस्य निवृत्तये ।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥५॥
तदा तदापि चागत्य लक्ष्म्याश्च ब्रह्मणस्तथा ।
तत्तत्कल्पावसाने च पुनर्वैकुण्ठमेति च ॥६॥
एतज्ज्ञात्वा गोप्रलयो ब्रह्मणो ज्ञानवैभवात् ।
वरप्रदानकल्पे च प्रार्थयामास वै भुवि ॥७॥
स्वामिन्नत्रैव भगवन्यावद्ब्रह्माण्डसंस्थितिः ।
स्थातव्यमत्र देव्या च भक्ताभीष्टप्रदायक ॥८॥
गोपालैर्गोपकन्याभिः क्रीडां कुर्वन् कुर्वन्विशारदः ।
वितानेव हविर्भुञ्जन्मत्कृते प्रतिवत्सरम् ॥९॥
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पंचभिरेव च ।
हूयते च पुनर्द्वाभ्यां स नो विष्णुः प्रसीदतु ॥१०॥

आश्रावयेति चतुरक्षर
मस्तु श्रौषतिति चतुक्षरम् ।
ये यजामहेति पंचाक्षरं
द्व्यक्षरो वषट्कारः ॥११॥

इत्येवं हूयते यत्र तस्मादत्र वस प्रभो ।
नो चेन्मम प्रियं नास्ति गोभिलाख्यस्य सर्वथा ॥१२॥

सत्यं मद्वचनं कर्तुं स्थातव्यं स्थानमुत्तमे ।
चम्पकारण्यसंज्ञे च दक्षिणे द्वारकास्थले ॥१३॥

तथा संप्रार्थितो विष्णुर्भक्तवश्यश्च सूचयन् ।
अकरोत्तत्र वासञ्च कलया कृतविग्रहः ॥१४॥
चतुर्विंशति तत् स्थानमेतच्चम्पककाननम् ।
मा कृणुध्वं संशयञ्च संशयात्मा विनश्यति ॥१५॥
पुराणं मानवो धर्मस्साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हतानि च हेतुभिः ॥१६॥
हन्यते हेतुवादेन स नरो नारकी भवेत् ।
त्वमत्र संशयं विद्वन्मा कुरुष्व द्विजोत्तम ॥१७॥
त्वं हि संशयविच्छेत्ता सर्वेषां प्राणिनां भुवि ।
प्रसङ्गादिदमाख्यातं विष्णोश्चरितमुत्तमम् ॥१८॥
शृण्वतां पठतां वापि विष्णुसायुज्यमस्तिवै ।

श्री सूत :—

अस्मिन्क्षेत्रे पुण्यतमे ये वसन्ति नरोत्तमाः ॥१९॥
पश्यन्तः प्रत्यहं देवं गोपालमपराजितम् ।
त एव धन्या भूलोके वैकुण्ठं ते व्रजन्ति वै ॥२०॥
ये च गोप्रलये तीर्थे गोभिलाख्ये च पावने ।
श्रीकृष्णपुष्करिण्यान्तु हरिद्राख्यानदीजले ॥२१॥

स्नान्ति सङ्कल्पपूर्वञ्च ते वै भागवतोत्तमाः ।
ते वै स्ववंशपितृभिर्वैकुण्ठे निवसन्ति वै ॥२२॥
द्वादशाक्षरमन्त्रं वा तथैवाष्टाक्षरं मनुम् ।
जपन्ति वै विशेषेण गुरुणोक्तक्रमेण च ॥२३॥
प्रत्यक्षरं कोटिकल्पं विष्णुलोके वसन्ति वै ।
क्षीराब्धितीर्थे पुण्ये वा चित्रायां पूर्णिमादिने ॥२४॥
तद्विष्णोरिति मन्त्रेण स्नात्वा वैकुण्ठमाप्नुयात् ।
पुण्डरीकस्य रक्षार्थं पुरा विष्णुविनिर्मितम् ॥२५॥
क्षीराब्धिरिति विख्यातं न भूतं न भविष्यति ।
एतद्रहस्यं कस्यापि न वक्तव्यं द्विजोत्तम ॥२६॥
आस्तिकानाञ्च वक्तव्यं नैष्ठिकानां विशेषतः ।
पाषण्डाः पतिता मूर्खाः वञ्चकाः क्रूरकर्मणः ॥२७॥
विश्वासं नैव कुर्वन्ति पुराणेषु कदाचन ।
अर्थवादं वदिष्यंति जीवनार्थञ्च केचन ॥२८॥
न तेषामिहलोकश्च परलोका न सन्ति वै ।
वेदे पुराणे शास्त्रे वाचागमेषु विशेषतः ॥२९॥
प्रमाणबुद्धिः कर्तव्या ब्राह्मणेन विजानता ।
विश्वासबुद्धिर्यस्यास्ति स वै ब्राह्मणपुङ्गवः ॥३०॥
अनेकजन्मसंसिद्धस्स एव भगवत्प्रियः ।
तस्य दर्शनमात्रेण सर्वे पुण्या भवन्ति च ॥३१॥
एकस्य पुण्यश्लोकस्य दर्शनेन पुरा द्विज ।
बहवो नरकान्मुक्ता विमानारूढमूर्तयः ॥३२॥
शङ्खचक्रधरा भूत्वा सर्वे च वनमालिनः ।
गता वैकुण्ठभवनं स्वपापात्परिमोचिताः॥३३॥
पुनाति भगवांल्लोकान्भक्तरूपेण सञ्चरन् ।
तस्मादेवं मया प्रोक्तं न चान्येन विशेषतः ॥३४॥

तस्मात्सर्वप्रयत्नेन भक्तिः कार्या जनार्दने ।
तद्भक्तजनवात्सल्यं तेषां पूजोपकारकम् ॥३५॥
सर्वं विष्ण्वर्पितञ्चैव भवत्येव द्विजोत्तम ।
तस्माच्च विष्णुभक्तानां दर्शनं दुर्लभं नृणाम् ॥३६॥
सर्वेषां विष्णुभक्तानां चम्पकारण्यवासिनाम् ।
कुलजातिविहीना वा पूज्याश्च भुवि मानवैः ॥३७॥
जननं मरणञ्चापि वासश्चापि नृणां कलौ ।
दक्षिणद्वारकायां च विशेषेण च दुर्लभम् ॥३८॥
एतद्वासिनमालोक्य विमुक्तास्सन्ति कोटिशः ।
तस्मादिदं मया प्रोक्तं पूर्वकारणमादितः ॥३९॥
एतत्कथाया श्रवणाद्गुरदेशः प्रसीदति ।
गोप्यं कुरुष्व विप्रेन्द्र भक्तेषु प्रकटं कुरु ॥४०॥
पापानि सर्वाणि लयं प्रयान्ति
भवन्ति पुण्यानि ततानि चात्र ।
क्षणं विवस्वान्न विमुक्तिमेति
श्रीशार्ङ्गचक्रासिगदादिधारी ॥४१॥

इति श्रीब्रह्माण्डपुराणे विष्णुक्षेत्रखण्डे
उत्तरभागे चम्पकारण्यमाहात्म्ये
नाम द्विषष्टितमोऽध्यायः ॥

---

## ॥ अथ त्रिषष्टितमोऽध्यायः ॥

श्री शौनकः —

तीर्थानाञ्चैव माहात्म्यं पुनः क्षेत्रस्य वैभवम् ।
श्रोतुकामस्य ये ब्रूहि सूत सूत मुनीश्वर ॥१॥
हरिद्राख्या नदी या च तस्याश्च महिमा अपि ।
विशेषेण च मे ब्रूहि द्वादशाक्षरवैभवम् ॥२॥
अष्टाक्षरस्य मन्त्रस्य मन्त्रोत्पत्तिक्रमेण च ।
क्षयस्य लक्षणञ्चैव जपताञ्चैव यत्फलम् ॥३॥
आसनादिविशेषांश्च मन्त्रराजद्वयस्य च ।
एतदन्यच्च यद्यस्ति स्थानवैभवसूचकम् ॥४॥

श्री सूत :—

सर्वज्ञ शौनक ब्रह्मन् मम भाग्यवशेन च ।
पृच्छसे गौरवं कृत्वा ज्ञातमात्रं वदामि ते ॥५॥
श्रीकृष्णः कमलानाथो योगिनां पतिरव्ययः ।
लोकाचारमनूसृत्य गोपकन्यासमावृतः ॥६॥
सह्यजाया विभज्याथ प्रवाहं किंचिदुत्तमम् ।
आनीय द्वारकाप्रान्तं विमानस्योत्तरे स्थले ॥७॥
तस्यामावाह्य गङ्गां च तीर्थानावाह्य सर्वशः ।
स्नापयित्वा ब्राह्मणांश्च प्रथमं तन्नदीजले ॥८॥
द्वारकावासिनस्सर्वान्साग्निहोत्रान्कुटुम्बिनः ।
सस्नौ पश्चात्स्वयं देवो देवकीतनयस्स्वराट् ॥९॥
अनन्तरूपो भगवान्द्वारकायां तथा पुरा ।
क्रीडां चकार सर्वात्मा मनोनयनमोहनः ॥१०॥

ताश्च तं परिवव्रुश्च क्रीडाकाले विनोदनैः ।
नानाविधैर्विकारैश्च भ्रूभङ्गैर्बहुभिः स्त्रियः ॥११॥
पश्चात्समानवेषाभिर्विदधुर्नेत्रयोर्गुरोः ।
काश्चिदालिङ्ग्य तिष्टन्ति काश्चित्सिंचन्ति शृङ्गकैः ॥१२॥
बाहुबन्धैश्च काश्चित्तं बबन्धुः परिवारिताः ।
भगवानपि गोपीनामनुकुर्वन् जनक्रियाम् ॥१३॥
बभूव लौलिकं भावं तासां तत्यार्थमत्यतु । (?)
हरिद्राकुङ्कुमाक्तानां गोपीनां देहमज्जनात् ॥१४॥
तन्नदीसलिलं सर्वं हरिद्राजलवद्बभौ ।

श्रीकृष्णपादाम्बुजरेणुशुद्धा
मुखाब्जसंक्षालनबिन्दुशुद्धा ।
केशावलीसेचनबिन्दुशुद्धा
पापौघसंशोधनकर्मशुद्धा ॥१५॥

गोपीकुचालङ्कृतकुङ्कुमेन
शुक्लाम्बुयुक्ता च हरिद्रराग ।
विराजते चम्पककानने सा
विमुक्तिदा पुण्यजलप्रवाहा ॥१६॥

गोपीजनैर्धारितमाल्यशोभा
तदीयवक्षोजविलोलिताङ्गा ।
भावैर्विलासैश्च जलाभिरामा
विराजते चम्पककानने सा ॥१७॥

श्री सूत.—

वैमानिका विमानस्था देवाः क्रीडां समीक्षितुम् ।
अन्तरिक्षस्थिता रेजुः किरन्तः कुसुमोत्करान् ॥१८॥

आकाशञ्च निराकाशं देववृन्दैरधिष्ठितम् ।
छायां देवस्य कुर्वन्त इव रेजुर्दिवौकसः ॥१९॥

ऋषयश्च तदा सिद्धा यक्षाश्चारणगुह्यकाः ।
सनकाद्या योगिनश्च पश्यन्तस्तत्र तस्थिरे ॥२०॥

अहो ब्रह्ममयं ह्येतं मानुषं भावमाश्रितम् ।
सर्वेषां पुण्ययोगार्थमेनां क्रीडां वितन्वते ॥२१॥

इति जल्पंति चान्योन्यं भगवद्दर्शनोत्सुकाः ।
वयं धन्या वयं धन्या न हि संशयमत्र वै ॥२२॥

वयं धन्या न चेदेवं हरिर्द्रष्टुं न शक्यते ।
श्वेतद्वीपाच्च वैकुण्ठाल्लोकाद्वै सत्यसंज्ञकात् ॥२३॥

वेदान्तोपनिषद्भागान्नैमिशात्पुष्करादपि ।
एतद्धि चम्पकवनं कृष्णप्रीतिकरं त्वभूत् ॥२४॥

आनन्दसन्दोहमयो योगिनामप्यगोचरः ।
स गोचरोऽभूत्सर्वेषां प्राणिनामत्र वै स्थले ॥२५॥

ज्ञात्वा खलु पुरा ब्रह्मा लक्ष्मीश्च हरिवल्लभा ।
मुनिशेषश्च विप्रेंद्रा गोप्रलयप्रमुखाः पुरीम् ॥२६॥

निर्माय भगवत्प्रीत्यै तपोयज्ञादि चक्रिरे ।
एतद्भूमिप्रवेशेन सर्वेषां ज्ञानमावहत् ॥२७॥

अत्रैव नियतं वासं कर्तव्यं हितमिच्छता ।
अष्टाङ्गयोगहीनाश्च ध्यानयोगविवर्जिताः ॥२८॥

अपि मुक्ता भवन्त्येव नात्र सन्देहकारणम् ।
रक्ताम्बुजाख्या कमला सर्वालङ्कारभूषिता ॥२९॥

अनुग्रहञ्च भक्तानां कर्तुमत्र व्यपस्थिता ।
काले गोप्रलयाख्येन मुनिना गोभिलेन च ॥३०॥

प्रार्थिता कृष्णसहिता साङ्गभूतैश्च शक्तिभिः ।
सेविता सार्वकालञ्च रक्षणार्थं जनस्य च ॥२१॥

तत्सन्निधानात्परमेतदुत्तमं
संपत्समृद्धं धनधान्यसंयुतम् ।
ऐश्वर्ययुक्ताश्च जनाश्च सर्वे
दयान्विता दानरतास्सुखान्विताः ॥२२॥

पुत्रादिभाग्यैश्च समन्विताश्च
नीरोगजाता निरुपद्रवाश्च ।
सत्कर्मनिष्ठास्सकलैश्च वन्दिताः
श्रीकृष्णभक्ताश्च परोपकाराः ॥२३॥

अतोऽत्र वासस्सुजनैश्च लभ्य
स्सामान्यतो नैव लभन्ति मर्त्याः ।
कामादिदोषैः परिवर्जिताश्च
कामप्रदास्सर्वजनेषु लभ्याः ॥२४॥

भृगुवारेषु सर्वेषु मासेषु नियतं नराः ।
हरिद्राख्यानदीतोये ये स्नान्ति प्रीतिपूर्वकम् ॥२५॥

ते लभन्तेऽष्टकामांश्च विष्णुभक्तिञ्च शाश्वतीम् ।
इह भुक्त्वा तु विपुलान्भोगांश्चैव सुपुष्कलान् ॥२६॥

परं पदं प्रयास्यन्ति विष्णुपादे शपाम्यहम् ।
पूर्णिमायाममायाञ्च ग्रहणे चन्द्रसूर्ययोः ॥२७॥

श्रवणार्हे व्यतीपाते संक्रमे विषुवद्वये ।
उच्चार्याष्टाक्षरं मन्त्रं दूर्वागोमयपूर्वकम् ॥२८॥

हरिद्राख्यानदीतोये यस्स्नाति प्रीतिपूर्वकम् ।
अपुत्रो लभते पुत्रान्कन्या सत्पतिमाप्नुयात् ॥२९॥

विधवा विष्णुसायुज्यं ब्रह्मचारी वरस्त्रियम् ।
विद्याकामो लभेद्विद्यां सत्यं सत्यं न संशयः ॥४०॥
चम्पकोद्भवपुष्पैश्च मालां कृत्वा सुशोभनाम् ।
मध्ये मध्ये तुलस्या च सङ्ग्रथित्वा च संधिषु ॥४१॥
चम्पकेशस्य देव्याश्च समर्पयति यो नरः ।
स्त्रियो वा कन्यकाश्चापि यो वा को वा नरोत्तमः ॥४२॥
लब्ध्वा ते सकलान्भोगान्वैकुण्ठं यान्ति निश्चितम् ।
हरिद्रानामनद्याश्च महिमा केन वर्ण्यते ॥४३॥
अनन्तमहिमा तस्य जानाति भगवान्हरिः ।
कृतघ्नोऽप्यत्र मुच्योऽभूत्पुरा सौराष्ट्रभूपतिः ॥४४॥
न मया शक्यते वक्तुं किमु वक्तव्यमत्र तु ।

इति श्रीब्रह्माण्डपुराणे चम्पकारण्यमाहात्म्ये
हरिद्रानदीमहिमानुवर्णनं नाम
त्रिषष्टितमोऽध्यायः ॥

---

# चतुःषष्टितमोऽध्यायः

श्री शौनक :—

सौराष्ट्राधिपतिः को वा तस्य नाम च किं द्विज ।
कृतघ्नत्वं कथं तस्य संभूतं तद्वदस्व नः ॥१॥

श्री सूत :—

सौराष्ट्रनामदेशोऽस्ति गोदावर्यास्तथोत्तरे ।
सिन्धुसौवीरयोर्मध्ये धनधान्यसमृद्धिमान् ॥२॥
ब्राह्मणक्षत्रियविशामाधारो लोकभूषणः ।
तद्राज्याधिपतिः कश्चिद्राजा शेखरनामकः ॥३॥
वेदवेदाङ्गतत्वज्ञो धनुर्वेदे च निष्ठित. ।
सर्वशास्त्रकलाभिज्ञो ब्राह्मणस्सत्यसङ्गरः ॥४॥
विष्णुपूजारतो नित्यं विष्णुध्यानपरायणः ।
यज्ञकर्मणि निष्णातो वेदोक्ताचारतत्परः ॥५॥
न्यायेन पालयन्राष्ट्रं प्रजानाञ्च हिते रतः ।
स कदाचिद्राजधर्ममनुसृत्य नृपोत्तमः ॥६॥
मृगयारसिको भूत्वा सेनया परिवारितः ।
कूटमन्त्रधरैः कैश्चित्पाशयन्त्रधरैरपि ॥७॥
झिल्लिकारण्यवनं प्राप्य श्वापदैश्च समाकुलम् ।
सिंहव्याघ्रवराहैश्च गवयैश्शशशल्यकैः ॥८॥
संयुक्तं परिबभ्राम धनुष्पाणिश्शरी नृपः ।
वायुना च समं वेगे वराहमभिधावतः ॥९॥
क्वचिद्दृष्टः क्वचिच्छन्नः क्वचिद्गगनमाश्रितः ।
व्याचकर्ष नृपश्रेष्ठं राजशेखरनामकम् ॥१०॥

तं धावयन्स राजा तु मध्याह्ने क्षुत्तृषाकुलः ।
आतपेन परिक्लिन्नो ब्राह्मणस्य वनान्तरे ॥११॥

पर्णशालामनुप्राप्य ययाचे प्राणरक्षणे ।
अन्नं देहीति विप्रश्च सोऽपि चान्नमदाद्विभोः ॥१२॥

भुक्त्वा तदन्नं नृपतिः वाचा संपूजयत्तदा ।
शनैस्स्वपुरमासाद्य पूर्ववन्नृपतिस्स्थितः ॥१३॥

स तु राज्ञः परीक्षार्थं गत्वा राजगृहं मुनिः ।
किंचिद्धनं गृहीत्वा तु चोरमार्गेण निस्सृतः ॥१४॥

ग्रामपालैस्तदा दृष्टो बद्धस्तैरतिभीषणैः ।
राज्ञोऽन्तिकं प्रापितश्च तूष्णीमेव स्थितो द्विजः ॥१५॥

आत्मरक्षाञ्च कर्तारं दृष्ट्वा ब्राह्मणमन्तिके ।
गच्छ गच्छेति चोवाच चोरस्त्वं ब्राह्मणाधम ॥१६॥

मदीयञ्च धनं दत्वा मद्देशादयन्यतो व्रज ।
इत्युक्त्वान्तःपुरं प्राप ब्राह्मणश्च ततो ययौ ॥१७॥

तदानीमेव राजानं कृतघ्नं दोषसंयुतम् ।
उन्मादरूपी भूतस्तु परिजग्राह शीघ्रतः ॥१८॥

बुद्धिभ्रंशस्ततो जातः त्यक्त्वा राजासनं महत् ।
एकाकी परिबभ्रम देशाद्देशं वनाद्वनम् ॥१९॥

विवस्त्रश्च कृशो दीनः कृष्णवर्णशरीरवान् ।
एवं वर्षशतं राजा कृतघ्नेन विदूषितः ॥२०॥

निन्दितश्च जनैस्सर्वैः रक्षोभिश्च पराजितः ।
क्रन्दन्रुदन्बहुविधं प्रलपन्परिवेष्टयन् ॥२१॥

पतन्गाच्छन्महदुःखमनुभूय क्रमेण च ।
अन्नदातुर्ब्राह्मणस्य पूर्वपुण्यवशेन च ॥२२॥

पर्णशालामनुप्राप्तं तं नृपं दृष्टवान्हरिः ।
कृपया परयाविष्ट इदं वचनमब्रवीत् ॥२३॥

यज्ञशील उवाच :—

भो भो राजन्महद्दुःखं प्राप्तवान्कर्मयोगतः ।
त्वद्विवेकं शोधयितुमहं ते गृहमागतः ॥२४॥
न तु चोरयितुं द्रव्यं मम द्रव्येण किं फलम् ।
तपोधना वयं राजन्सदा सत्कर्मभाविताः ॥२५॥
दुरात्मत्वंतव विभो दृष्ट्वा च न च शप्तवान् ।
स्वयमेव पतंतं कस्तं पातं पातयेत्सुधीः ॥२६॥
एतदर्थं समालोक्य तूष्णीमेव गतोऽस्मि वै ।
शासितव्या दुरात्मान इति मत्वा च शास्त्रतः ॥२७॥
दुरात्मनश्च ये लोके शास्तारस्तेषु वै द्विजाः ।
वेदशास्त्रपुराणानि स्मृतयश्च कलान्तराः ॥२८॥
सर्वञ्च ब्राह्मणाधीनं तस्माद्ब्रह्मणदैवतम् ।
घ्नन्तं शपन्तं परुषं वदन्तं
दुर्वृत्तमाचारविवर्जितं च ।
दृष्ट्वा च राजा न च शासयेत्तान्
शास्ता पतत्येव च तत्क्षणेन ॥२९॥
आलोक्य सर्वशास्त्राणि ब्राह्मणाननुसृत्य च ।
राजा पालयते यस्तु स एव सुखमेधते ॥३०॥
नो चेदेवं भवत्येव स्मृतिं दास्यामि तच्छृणु ।
मदाश्रममुपेतानां न कश्चिद्दुःखमस्ति वै ॥३१॥
सोढास्मि तव धिक्कारं शान्त्यादिगुणसंयुतः ।
सन्ति क्षेत्राणि पुण्यानि जम्बूद्वीपे महत्तरे ॥३२॥

स्वायम्भुवानि पापानां नाशकानि महन्ति च ।
अष्टोत्तराणि दिव्यानि विष्णोः प्रियकराणि च ॥३३॥
आर्षाण्यपि च सै—नि भुक्तिमुक्तिप्रदानि च ।
विष्णवागमोक्तमार्गेण कल्पितानि च लक्षणैः ॥३४॥
गौतम्याश्च तटे चैव मलप्रहरिकातटे ।
तुङ्गातटे च भद्रायास्तटे चैव विशेषतः ॥३५॥
क्षीरनद्यास्तटे चैव नर्मदायास्तथैव च ।
भागीरथ्यास्तटे चैव शोणभद्रातटे तथा ॥३६॥
समुद्रमध्ये द्वीपेषु समुद्रतट एव च ।
विशेषेण च सन्त्येव कावेर्यास्तीरयोर्नृप ॥३७॥
कावेर्या दक्षिणे तीरे योजनद्वितयान्तरे ।
दक्षिणद्वारका नाम चम्पकारण्यसंज्ञितम् ।
ब्रह्मणा पूजितं स्थानं कल्पान्ते विधिपूर्वकम् ॥३८॥
लक्ष्म्या चापि स्वयं देवश्श्रीकृष्णः परिपूजितः ।
मन्त्रद्वयं तयोः पूर्वं ददौ स भगवान्पुरा ॥३९॥
साक्षाद्गोपालवेषेण भगवांस्तत्र संस्थितः ।
त्रिसहस्रैर्मुनिवरैर्यज्ञकर्मसु निष्ठितैः ॥४०॥
सायं प्रातः प्रतिदिनं हवींषि हुतभुङ्मुखे ।
समर्पयद्भिर्विप्रेन्द्रैर्भक्त्या चैव पृथक्पृथक् ॥४१॥
अतिथ्यभ्यागतानां च ददद्भिश्चान्नसंचयम् ।
कुटुम्बिभिः प्रतिदिनं कृष्णः प्रीतो भवत्विति ॥४२॥
तादृशो भगवांस्तत्र जलक्रीडामथाकरोत् ।
गोपालैर्गोपिकाभिश्च हरिद्राकुङ्कुमांकितैः ॥४३॥
प्रार्थितो मुनिबृन्दैश्च ब्रह्मभावनया युतैः ।
क्रीडार्थश्च भगवान्कावेर्यां संविभज्य च ॥४४॥

नद्याञ्च ब्रह्मरूपिण्यां नदीमानीय चादरात् ।
क्रीडाञ्चकार तस्याञ्च दक्षिणद्वारकास्थले ॥४५॥
क्रीडया तज्जलं सर्वं हरिद्राकुङ्कुमांकितम् ।
हरिद्राख्या नदी सा च कृष्णपादाब्जसेवनात् ॥४६॥
प्रायश्चित्तानि पापानां प्रायश्चित्तकरं नृणाम् ।
तस्याञ्च सर्वपापानि नश्यन्त्येव क्षणेन च ॥४७॥
नराणां नास्तिकानाञ्च वेदविक्रयिणां तथा ।
मातापित्रोर्दूषकाणां प्रायश्चित्तं न विद्यते ॥४८॥
एतेषामपि पापानां हरिद्राख्या महानदी ।
तद्विष्णोरिति मन्त्रेण स्नायात्तत्र नदीजले ॥४९॥
दूर्वायुग्मं गृहीत्वा च प्रार्थयित्वा तु तां नदीम् ।
नाभिदघ्नजले स्थित्वा विष्णुध्यानपरायणः ॥५०॥

हे कृष्णपादांबुजरेणुपूते
गोपाङ्गनाकुङ्कुमलिप्ततोये ।
ब्रह्मस्वरूपे मम पापनाशनं
कुरुष्व गोपालवरप्रसादिते ॥५१॥

एवं संप्रार्थ्य तां दिव्यां नदीमत्यन्तपावनीम् ।
त्रिर्निमज्य तटंगत्वा नमस्कारं च कारयेत् ॥५२॥
तत्क्षणेनैव पापेभ्यो मुच्यन्ते पापिनोऽहसः ।
सत्यं पथ्यञ्च ते वच्मि कुरु शीघ्रं नृपोत्तम ॥५३॥
तदैव पूतो भवसि हरिद्राजलसंप्लवात् ।
सारात्सारं पुनस्सारं सत्यमेव मयोदितम् ॥५४॥

सूत :—

इति राजा स विप्रस्य वचनश्रवणात्परम् ।
विशुद्धदेहः पूतात्मा तदैव च तथाकरोत् ॥५५॥

एतद्वेदविदां गुह्यं भवतामत्र चोदितम् ।
राजापि रोषान्मुक्त(श्च) विमानवरमाश्रितः ॥५६॥
आगत्य च विमानञ्च नमस्कृत्वा च सादरम् ।
ध्यानेनानीय चात्मीयं धनमात्मगृहे स्थितम् ॥५७॥
कोटिसंख्यञ्च रत्नानि दत्वा पूजार्थमादरात् ।
दत्वा दानानि विप्रेभ्यो महादानानि भूरिशः ॥५८॥
कृष्णतीर्थादिषु स्नात्वा बुद्धिपूर्वं च भक्तितः ।
तत्र तत्र च दानानि दत्वा वित्तानुसारतः ॥५९॥
सर्वं कृष्णार्पणं दत्वा पीत्वा तीर्थञ्च सन्निधौ ।
पंच पात्राणि देवस्य दत्वा चार्घ्यक्रियाविधौ ।
देवेन समनुज्ञातः पूर्ववन्नृपतिस्स्थितः ॥६०॥
स्वराज्यंः प्राप्तवान्पश्चात्कृतार्थश्चंपकावने ।
एतादृशाया नद्याश्च महिमा केन वर्ण्यते ॥६१॥
अहो देवस्य माहात्म्यं अहो तीर्थस्य वैभवम् ।
अहो वनस्य माहात्म्यं कृतघ्नस्यापि मोचकम् ॥६२॥
एतच्चरित्रममलं ये शृण्वन्ति पठन्ति च ।
ते सर्वे पापनिर्मुक्ता वैष्णवं धाम यान्ति वै ॥६३॥

इति श्रीब्रह्माण्डपुराणे विष्णुक्षेत्रखण्डे
उत्तरभागे चंपकारण्यमाहात्म्ये
हरिद्रानदी प्रशंसने कृतघ्नमोचनं नाम
॥ चतुः षष्टितमोऽध्यायः ॥

---

## पञ्च षष्टितमोऽध्यायः

श्री शौनकः —

वयं धन्या वयं धन्या यत्कृपापात्रतां गताः ।
सूत पौराणिकश्रेष्ठ कृतार्था वयमद्य तु ॥१॥
हरिद्रायाश्च माहात्म्यमितिहासपुरस्सरम् ।
आख्यातं भवता सम्यगस्माकं पुण्यगौरवात् ॥२॥
तपांसि यानि तप्तानि ये तावन्तमनेहसम् ।
सफलं तानि जातानि भवदीयावलोकनात् ॥३॥
तपांसि नो चेदस्माकं कथं त्वद्दर्शनं भवेत् ।
अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम् ॥४॥
नित्यञ्च विष्णुभक्तानां लभ्यं त्वद्दर्शनं मुने ।
विष्णोश्च लोकनाथस्य चरितं महदद्भुतम् ॥५॥
केन वा वर्णितुं शक्यं त्वं विना लोकमानित ।
अत एव भवन्तं तन्नः पृच्छामि च पुनः पुनः ॥६॥
अत्र सन्ति तथान्यानि तीर्थानि मुनिभिर्मुने ।
तेषाञ्चैव तु माहात्म्यं वक्तव्यं कृपया द्विज ॥७॥
विष्णोः स्थानानि भूलोके शतमष्टोत्तरं त्विति ।
कथितं भवता चात्र बहुवारं ममाग्रतः ॥८॥
तानि नः क्रमशो ब्रूहि श्रवणादघनाशनम् ।
स्थानानां कीर्तनादेव मुच्यन्ते पापराशिभिः ॥९॥
एकनामश्रवादेवमुक्ता यान्ति परां गतिम् ।
तस्मादवश्यं वक्तव्यं स्थानानि च पृथक्पृथक् ॥१०॥

सूत उवाच :—

अहो शौनक सद्बुद्धे भगवद्भक्तिभावित ।
नो चेदेवं विधा बुद्धिः कथं वा तव जायते ॥११॥

अनेकजन्मशुद्धानां बुद्धिरेवंविधा भवेत् ।
अतीव मम सन्तुष्टं मानसं परमार्थतः ॥१२॥
सत्यमेव च वक्ष्यामि श्रुणुष्व सुसमाहित ।
व्यासपादांबुजं नत्वा कृष्णं च परमेष्ठिनम् ॥१३॥
समाधाय च मच्चित्तं भवतां क्षेमसिद्धये ।
जगन्नाथं समारभ्य श्रीनृसिंहस्थलावधि ॥१४॥
स्थानानां कीर्तनादेव विष्णुसायुज्यमस्ति वै ।
भूतप्रेतपिशाचाश्च डाकिन्यो ब्रह्मराक्षसाः ।१५॥
अतिभीताः पलायन्ते स्थानानां कीर्तनश्रवात् ।
लभन्ति मर्त्याः प्रायेण स्थानानां दर्शनं फलम् ॥१६॥
अग्निष्टोमसहस्रस्य वाजपेयशतस्य च ।
प्राप्नुवन्ति फलान्यद्धा कृष्णो वेति च तत्परम् ॥१७॥
त्वत्पुण्यसदृशं पुण्यं त्वत्तपस्सदृशंतपः ।
त्वद्भक्तिसदृशा भक्तिर्हरौ वेदे द्विजेषु च ॥१८॥
अत एव प्रवक्ष्यामि स्थानानि च पृथक्पृथक ।

इति श्रीब्रह्माण्डपुराणे विष्णु क्षेत्रखण्डे उत्तर
भागे चम्पकारण्यमाहात्म्ये पंच
षष्ठितमोऽध्यायः ॥

---

# षट्षष्टितमोऽध्यायः

श्री सूत उवाच :—

स्थानमाहात्म्यमेतत्तु रहस्यं मन्त्रमुत्तमम् ।
कदापि न मया प्रोक्तमन्येषामग्रतो द्विज ॥१॥
इदानीमेव वक्ष्यामि भवतां क्षेमसिद्धये ।
मन्मुखादेव शृण्वन्तु सर्वे विष्णुपरायणाः ॥२॥
भगवानपि वैकुण्ठे प्राह देव्यै रसादरम् ।
प्रार्थितो बहुकालञ्च लक्ष्म्या चैव धृतं पुरा ॥३॥
तत्स्थानकीर्तनं सर्वं गरुडायोपदेशितम् ।
गरुडान्मद्गुरुः प्राप तस्मात्प्राप्तं मया द्विज ॥४॥
इदानीं तव पुण्येन उपदिश्यामि तच्छृणु ।
गोप्यं कुरुष्व विप्रेन्द्र नास्तिकेषु कदाचन ॥५॥

सूत उवाच :—

पूर्वाम्बुधेश्च तीरे च जगन्नाथं महास्थलम् ।
जननं मरणं तत्र वासो मोक्षप्रदो नृणाम् ॥६॥
श्रीकूर्ममवताराख्यं मन्दरोद्धरणे पुरा ।
श्रीकाकुलं महास्थानं दिव्यज्ञानप्रदायकम् ॥७॥
लोलाद्रिर्बाणनद्याश्च तटे दक्षिणसंज्ञके ।
वनमालास्थलं पुण्यं वैकुण्ठगिरिरेव च ॥८॥
ततो मन्त्रगिरिश्चापि श्रीरङ्गगिरिरेव च ।
श्रीमत्सर्पगिरिश्चापि कनको गिरिरेव च ॥९॥
कनकाम्बरमिरिब्रह्मंस्तथा गोवर्धनाह्वयः ।
अहोबिलं महापुण्यं कदिरीगिरिरेव च ॥१०॥

श्रीमान्हस्तिगिरिश्चैव पुण्यकोटीति विश्रुतः ।
शेषाचलं महापुण्यं श्रीमान्भक्तिगिरिस्तथा ॥११॥

पाण्डुरङ्गगिरिश्चापि यत्र विठ्ठलनामकः ।
आस्ते विष्णुः प्रसन्नात्मा सर्वेषाञ्च वरप्रदः ॥१२॥

सुपर्णपर्वतश्चापि तोताद्रिश्च ततः परम् ।
गरुडाद्रिस्तथा पुण्यश्चंपकारण्यमेव च ॥१३॥

श्वेताचलं हिरण्याद्रिर्नमस्कारगिरिस्तथा ।
वृषभाद्रिर्महापुण्यो यत्र सुन्दरनामकः ॥१४॥

घटिकाचलं महापुण्यं इन्द्राचलमतः परम् ।
वरुणाचलं(?) महापुण्यं ततो गिरिभवात्मकः ॥१५॥

श्रीपातालपुरञ्चैव श्रीमत्पूर्वपुराह्वयम् ।
भक्तिसारं महापुण्यं पद्मनाभमतः परम् ॥१६॥

श्रीमदग्निपुरं चैव श्वेतद्वीपं महत्तरम् ।
श्रीशरण्यपुरञ्चैव महारण्यमतः परम् ॥१७॥

क्षीराब्धिश्च महापुण्यो भगवानत्र संस्थितः ।
बदर्याश्रमं महापुण्यं नरनारायणाश्रमम् ॥१८॥

भूतस्थानं महापुण्यं मेघस्थानमतः परम् ।
वटस्थलं विशेषेण श्रीमद्दक्षिणकाशिका ॥१९॥

गजस्थलं महापुण्यं मेघस्थानमतः परम् ।
दर्भस्थानं महापुण्यं स्तम्भस्थानमेव च ॥२०॥

भक्तिसाक्ष्यं महास्थानं भार्गवाख्यमनुत्तमम् ।
हनूमन्तं महापुण्यमनन्तशायनाह्वयम् ॥२१॥

आदिकेशवनाथश्च कुम्भघोणमतः परम् ।
अयोध्याख्या महापुण्या प्रयागा पुण्यदायिनी ॥२२॥

द्वारावती महापुण्या तथा मायापुरी शुभा ।
अवन्तिका महापुण्या हृदयस्थानमेव च ॥२३॥

श्रीमद्भयापुरी चैव गङ्गासागरमेव च ।
चक्रतीर्थं महापुण्यं तुलसीहृदयं तथा ॥२४॥

श्रीमन्मृदुश्चैव प्रभंजनमतः परम् ।
नन्दिग्रामं चित्रकूटं तथा धर्मपुरी परा ॥२५॥

मणिकूटं व्याघ्रपुरं श्रीकृष्णपुरमेव च ।
श्रीमन्नन्दिपुरञ्चैव गोष्ठीपुरमतः परम् ॥२६॥

नैमिरां वारुणपुरं पराश्रममतः परम् ।
हरिक्षेत्रं कुरुक्षेत्रं तथा गोपवतीपुरम् ॥२७॥

श्रीकृष्णं च महापुण्यं यत्र श्वेतवराहवः ।
श्रीद्वारंकुरुकायं च भक्कुलीकचुरं तथा ॥२८॥

अपूर्वपुरमित्युक्तं कन्दनन्दनमेव च ।
रविमण्डलञ्च गोमन्तं सिंहाद्रिः पुण्यपर्वतः ॥२९॥

एतानि पुण्यक्षेत्राणि विष्णोरायतनानि च ।
दर्शनात्स्मरणाच्चैव कीर्तनात्पापमोचनम् ॥३०॥

स्नानकाले श्राद्धकाले पूजाकाले हरेस्तथा ।
एकैकं कोटिगुणितं फलमाप्नोति मानवः ॥३१॥

स्थानाध्यायमिदं पुण्यं लिखित्वा यस्तु पूजयेत् ।
तन्मन्दिरञ्च वैकुण्ठं तत्र सन्निहितो हरिः ॥३२॥

यत्र भागवताः पुण्यास्सालग्रामं च यत्र वै ।
तुलसीकाननं यत्र यत्रैव भगवत्कथा ॥३३॥

वेदपारायणं यत्र तत्र सन्निहितो हरिः ।
मार्गे पानीयदातारस्सत्रशालाप्रवर्तकाः ॥३४॥

तदाकारामकर्तारः तत्र सन्निहितो हरिः ।
मातृपूजापरा यत्र पितृपूजापरायणाः ॥३५॥
द्वादश्यामन्नदातारः तत्र सन्निहितो हरिः ।
युद्धकाले च संप्राप्ते विवादे-शत्रुपीडने ॥३६॥
लिखित्वा धारयेद्यस्तु शत्रूञ्जयति निश्चयम् ।
प्रयाणकाले संप्राप्ते चोरव्याघ्रादिपीडने ॥३७॥
संस्मरेदेतदध्यायं सुखं प्राप्नोति मानवः ।
गुरोर्मुखाद्गृहीत्वा तु नित्यं पठति यो नरः ॥३८॥
एकवारं द्विवारं वा स एव हरिरुच्यते ।
जन्मर्क्षे पूर्णिमायाञ्च दर्शेऽष्टम्यां विशेषतः ॥३९॥
जपित्वा स्नाति यो मर्त्य स्तथैव पितरश्च ये ।
आब्रह्मस्तम्बपर्यन्तं सुधां पीत्वा यथासुखम् ॥४०॥
वैकुण्ठादिषु लोकेषु विमाने सञ्चरन्ति वै ।
तेषां न पुनरावृत्तिर्विष्णुरूपांतरन्ति वै ॥४१॥
तस्मात्सर्वप्रयत्नेन श्रोत्रैरेतदनुत्तमम् ।
श्रोतव्यं पठितव्यञ्च कीर्तितव्यं हितेप्सुभिः ॥४२॥
एकाक्षरोच्चारणेन शंखचक्रगदाधराः ।
भवन्ति मर्त्याः प्रायेण नात्र कार्या विचारणा ॥४३॥
विशेषाच्चंपकारण्ये राजगोपालसन्निधौ ।
पठन्ति मनुजश्रेष्ठाः सर्वलोकेषु पूजिताः ॥४४॥
अस्याध्यायस्य ऋषिः कृष्णो देवता भार्गवी शुभा ।
छन्दोऽनुष्टुब्भगवती श्रीबीजं कीलकं भवेत् ॥४५॥
ह्रींकारशक्तिरित्युक्ता प्रणवेन समन्विता ।
भक्तेष्टदानविनय चतुर्वर्गफलाप्तये ॥४६॥

सर्वार्थसिद्धिर्भवति विष्णुसायुज्यमाप्नुयात् ।
अपुत्रो लभते पुत्रं षण्मासजपमात्रतः ॥४७॥
तीर्थे गोप्रलये चैव गोभिलाख्ये च तीर्थके ।
श्रीकृष्णतीर्थे स्नात्वा च दत्वा काञ्चनमेव च ॥४८॥
निष्कमात्रं सुवर्णं वा तदर्धार्धमथापि वा ।
तदर्धमथवा कुर्याद्दारिद्र्यविनिवृत्तये ॥४९॥
वित्तशाठ्यमकृत्वा तु दत्वा वित्तानुसारतः ।
सत्पुत्रांल्लभते मर्त्यो विष्णुभक्तान्महात्मनः ॥५०॥
एकभुक्तस्सदा मौनी नियमेन जपेत्सदा ।
सिंहासनपतिर्भूत्वा विष्णुलोकं च गच्छति ॥५१॥

इति श्रीब्रह्माण्डपुराणे विष्णुक्षेत्रखण्डे
उत्तरभागे चम्पकारण्यमाहात्म्ये
विष्णुविमानगणनं नाम
षट्षष्टितमोऽध्यायः ॥

## सप्तषष्टितमोऽध्यायः

श्री शौनक :—

सूत पौराणिकश्रेष्ठ सर्वलोकहिते रत ।
मत्प्रश्नानुगुणं सर्वं कथितं भवताधुना ॥१॥
मन्त्रोत्पत्तिञ्च महिमां तत्ततो ब्रूहि सिद्धये ।
येन जप्तेन यत्पुण्यं फलं भवति वै नृणाम् ॥२॥
नारायणो यथा प्रीतो भवति ब्रह्मभावनः ।
रहस्यकथनं ह्येतद्वक्तव्यं सर्वथा मम ॥३॥

श्री सूत :—

आवश्यकेन मत्प्रीत्य तपसां फलसिद्धये ।
आहो महाभागवतो भवान् लोकैकपूजितः ॥४॥
मन्त्रे भक्तिर्दृढा जाता तपसः फलगौरवात् ।
द्वादशाक्षरविद्याया उत्पत्तिं बीजरूपिणीम् ॥५॥
यन्मन्त्रोच्चारणेनैव कृतार्था यान्ति सद्गतिम् ।
तारं प्रथममुच्चार्य बिन्दुनादसमन्वितम् ॥६॥
नारायणाख्यं यद्बीजं प्रथमस्वरभूषितम् ।
पञ्चमं पञ्चवर्गस्थं द्वितीयं बीजमुच्यते ॥७॥
षड्वर्गान्तं तथोच्चार्य बिन्दुनादसमन्वितम् ।
तृतीयं बीजमित्युक्तं महापातकनाशनम् ॥८॥
तद्वर्गवेदसंख्याकं वर्णं प्रथमभूषितम् ।
चतुर्थं बीजमित्युक्तं साक्षाद्भगवदात्मकम् ॥९॥
द्वितीयवर्गमध्यस्थं प्रथमेन समन्वितम् ।
पञ्चमञ्चैव तद्बीजं सर्वेषां भोगमोक्षदम् ॥१०॥
वर्गसप्तमध्यस्थं वारुणं बीजमुच्यते ।
तद्धि वश्यकरं नृणां महासौभाग्यदायकम् ॥११॥

पंचमाद्यं महाबीजं वेदस्वरसमन्वितम् ।
सप्तमं बीजमित्युक्तं लक्ष्मीप्रीतिकरं शुभम् ॥१२॥
ततो वारुणमुच्चार्य द्वितीयकलया युतम् ।
वश्यकामस्तदावश्यमेकमेव समुच्चरेत् ॥१३॥
अष्टवर्गान्तरं बीजं तत उच्चारयेद्बुधः ।
तृतीयकलया युक्तं परतत्वप्रबोधनम् ॥१४॥
पंचवर्गस्थमध्यार्णं चतुर्थवलयावृतम् ।
देवीप्रसादजनकं देवीबीजमनुत्तमम् ॥१५॥
वारुणञ्च तथोच्चार्य द्वितीयस्वरभूषितम् ।
एकादशं महाबीजमैक्यदं सर्वदेहिनाम् ॥१६॥
सप्तमाद्यं महाबीजं प्राणाख्यं सर्वतो वृतम् ।
एकद्वादशवर्णाख्यं वासुदेवमयं मनुम् ॥१७॥
चतुर्णां साङ्गवेदानां रहस्यमतिपावनम् ।
यस्य वा हृदये नित्यं वर्तते द्वादशाक्षरम् ॥१८॥
गुरूपदिष्टमार्गेण साक्षान्नारायणात्मकम् ।
स वैकुण्ठपदं प्राप्य तत्रैव परिलीयते ॥१९॥
यस्मिन्क्षेत्रे महाविद्यां ब्रह्मणे समुपादिशत् ।
मुनेर्गोपलयस्यापि गोभिलस्य श्रियस्तथा ॥२०॥
ते लब्ध्वा परमं मन्त्रं मुदमापुः प्रहर्षिताः ।
यजुर्वेदगतं मन्त्रं वेदपाठक्रमेण च ॥२१॥
चतुर्विंशति तत्त्वानां आदिभूतमिदं स्थलम् ।
मन्त्रद्वयस्य माहात्म्यं कोऽपि भूमौ न वेत्ति वै ॥२२॥
यस्यानुग्रहमस्तीह स वेत्ति हि न संशयः ।
प्रह्लादोऽत्रिर्वसिष्ठश्च शुको नारद एव च ॥२३॥

अनुग्रहबलादेतज्ज्ञातवन्तश्च वैभवम् ।
अस्मिन्क्षेत्रे महापुण्ये चम्पकारण्यसंज्ञिते ॥२४॥

ये जपन्ति नरश्रेष्ठास्ते चक्राङ्का भवन्ति च ।
इह लोके तु सौभाग्यं पुत्रपौत्रादिसंयुताः ॥२५॥

अनुभूय चिरं कालं धनधान्यादिसंयुताः ।
देहान्ते विष्णुसायुज्यं प्राप्नुवन्ति नरोत्तमाः ॥२६॥

पालाशे बिल्वफलके कूर्मपीठेऽथवा-मुने ।
बिल्वमूले स्थिरो भूत्वा द्वादशाक्षरमुत्तमम् ॥२७॥

जप्त्वा द्वादशसाहस्रं हुत्वा चैव दशांशकम् ।
तर्पयित्वा ब्राह्मणांश्च भोजयित्वा च वैष्णवान् ॥२८॥

आकर्षयेन्नरान्नारी जपाद्दूरस्थितानपि ।
वश्यार्थश्चैव पुत्रार्थीन्यग्रोधफलके स्थितः ॥२९॥

मन्त्रं द्वादशसाहस्रं जपेत्पद्मासने स्थितः ।
सर्वे जनास्तस्य वश्या भवन्ति हि न संशयः ॥३०॥

अपुत्रो लभते पुत्रान्प्रत्यहं मासमात्रतः ।
दारिद्र्योच्चनार्थाय धनस्यागमनाय च ॥३१॥

वैतसे फलके स्थित्वा दिनमष्टोत्तरं शतम् ।
हरिद्राख्यानदीतीरे जपमत्यन्तपुण्यदम् ॥३२॥

अचिरादेव दारिद्र्यमोचनं मासमात्रतः ।
भवत्येव न सन्देहः कृष्णस्यैव प्रसादतः ॥३३॥

धनार्थी धनमाप्नोति कुबेर इव चापरः ।
अभावे फलकादीनामश्वत्थफलके स्थितः ॥३४॥

यं यं कामं समुद्दिश्य प्रत्यहं पूजयेत्तु यः ।
अष्टोत्तरसहस्रञ्च न्यासध्यानपुरस्सरम् ॥३५॥

हरिद्राख्यानदीतीरे धनुर्मासे विशेषतः ।
अथवा कार्तिके मासि तं तं काममवाप्नुयात् ॥३६॥
राजगोपालमूर्तिश्च चम्पकारण्यनामकः ।
सर्वान्कामान्ददात्येव सन्तुष्टस्स्याज्जपेन च ॥३७॥
निष्कामी भोगयुक्तोऽपि प्रजले भक्तिपूर्वकम् ।
भोगान्ते तस्य वैकुण्ठे पदं तस्य प्रदास्यति ॥३८॥
अकृतातिथिपूजानामनैकादश्युपोषिणाम् ।
अमहाविष्णुभक्तानां न लभ्यो मन्त्र एव च ॥३९॥
लभ्यः पुण्यवतामेव वासस्त्वस्थान उत्तमे ।
चम्पकारण्यमध्ये ये भक्तिहीना अपि द्विजाः ॥४०॥
वसित्वान्यत्र गच्छन्ति ते वै भागवतोत्तमाः ।
देहान्ते विष्णुसायुज्यं लभन्ते नात्र संशयः ॥४१॥
करवीरप्रसूनैश्च कह्लारैररविन्दकैः ।
होमं कुर्वन्ति ये चात्र तदैव भगवान्स्वयम् ॥४२॥
श्रिया समेत आगत्य मनोऽभीष्टन्ददाति हि ।
योगिनस्सनकाद्याश्च कपिलाद्याश्च योगिनः ॥४३॥
वालखिल्यादिमुनयो राजानो जनकादयः ।
सारूप्यमुक्तिं प्राप्ताश्च ते कुर्वन्त्याशिषो मुदा ॥४४॥
अत्र ये पापकर्माणः पुण्यकर्माण एव च ।
सर्वे जनास्समा एव क्षेत्रस्यास्य च वैभवात् ॥४५॥
उपदानप्रदातारो मुष्टिमालान्नदायकाः ।
शङ्खचक्राङ्किता भूत्वा वैकूण्ठे निवसन्ति वै ॥४६॥
येन केनाप्युपायेन उदरम्भरणेन वा ।
परसेवारतो वापि वेश्याभोगरतोऽपि वा ॥४७॥

उष्णशान्त्यै कृष्णतीर्थे तथा गोप्रलयेऽपि वा ।
हरिद्रनद्यामपि वा पतन्ति जलमध्यतः ॥४८॥

तत्क्षणेन विमुक्ताश्च भवन्ति हि न संशयः ।

इति श्रीब्रह्माण्डपुराणे विष्णु क्षेत्रखण्डे उत्तरभागे
चम्पकारण्यमाहात्म्ये मन्त्रवैभव
कथनं नाम सप्तषष्टितम
अध्यायः ॥

---

## ॥ अष्टषष्टितमोऽध्यायः ॥

श्री सूत उवाच :—

शृणोतु शौनकमुने.भूयोऽपि क्षेत्रवैभवम् ।
अत्र लोष्टाश्च पाषाणास्सिकतास्तरुगुल्मकाः ॥१॥

मृगाश्च पक्षिणस्सर्वे हरिरूपा न संशयः ।
मकरे माघमासे च तपस्विजनवल्लभे ॥२॥

प्रातरेव समुत्थाय सूर्यस्योदयतः पुरा ।
सन्ध्यामुपास्य विधिवत् सपवित्रकरश्शुचिः ॥३॥

किञ्चिदभ्युदिते सूर्ये हरिद्राख्यानदीजले ।
करोति माघस्नानञ्च द्वादशाक्षरमुच्चरन् ॥४॥

नारायणाष्टवर्णं वा जपन्भक्त्या हरिं स्मरन् ।
स कोटिकुलसंयुक्तः सर्वपापविमोचितः ॥५॥

विमानवरमारुह्य देवस्त्रीपरिवारितः ।
पुनरावृत्तिरहितं पदं प्राप्नोति मानवः ॥६॥

अतस्स्नानफलावाप्त्यै दानं प्राप्नोति मानवः ।
प्रथमे दिवसे पुण्ये ताम्बूलं दानमाचरेत् ॥७॥

द्वितीये फलदानञ्च कदलीफलनामकम् ।
तृतीये नारिकेलञ्च पनसञ्च चतुर्थके ॥८॥

आमलकञ्च पञ्चम्यां षष्ठ्यां कन्दञ्च दापयेत् ।
सप्तम्यां शृङ्गिबेरञ्च कूष्मांडं चाष्टमीदिने ॥९॥

क्षीरं च नवमे दद्याद्दशम्यां दधि दापयेत् ।
एकादश्यामाज्यदानंद्वादश्यां नवनीतकम् ॥१०॥

त्रयोदश्यां हरिद्राञ्च दक्षिणासहितां चरेत् ।
गोरोचनं चतुर्दश्यां दध्यन्नं पूर्णिमादिने ॥११॥

षोडशे दिवसे चैव हरिचन्दनमाचरेत् ।
दिने सप्तदशे पुण्ये मुद्गदानं समाचरेत् ॥१२॥

अष्टादशेऽहि माषं स्यात् शठमेकोनविंशके ।
विंशे च नारङ्गफलं लिकुचं त्वेकविंशके ॥१३॥

द्वाविंशे तिलदानं स्यात्ताम्रपात्रे च पूरितम् ।
तण्डुलञ्च त्रयोविंशे प्रस्थद्वयमितं तथा ॥१४॥

चतुर्विंशे व्रीहिदानं भारमात्रं तदर्धकम् ।
तदर्धमथवा कुर्याद्दारिद्र्यविनिवृत्तये ॥१५॥

गोधूमाः पंचविंशे च षड्विंशे चणकास्तथा ।
सप्तविंशे च वस्त्रं स्यादष्टाविंशे च कम्बलम् ॥१६॥

एकोनविंशके चैव गोपीचन्दनमाचरेत् ।
सुधामृत्तिकदानं च शक्त्या दक्षिणया युतम् ॥१७॥

त्रिंशाह्निने च माघान्ते तुलसीदलसंयुतम् ।
दानं यः कुरुते भक्त्या वेदयुक्तद्विजातये ॥१८॥

वेदयुक्तो द्विजो यस्तु दानपात्रश्च उच्यते ।
अवेदवादी यो विप्रो बहिष्कार्यस्स उच्यते ॥१९॥

वेदविद्याविनीताय साचाराय कुटुम्बिने ।
शान्त्यादिगुणयुक्ताय दरिद्रायात्मवेदिने ॥२०॥

विशेषाद्विष्णुभक्तायदानं समाचरेत् ।
अन्नञ्च प्रत्यहं दद्याद्यथाशक्ति दिने दिने ॥२१॥

सूपापूपघृतोपेतं सर्वं व्यंजनसंयुतम् ।
तत्पुण्यगणनं कर्तुं समर्थो हरिरेव च ॥२२॥

सर्वाण्युदकपूर्वाणि दक्षिणासहितानि च ।
दातव्यानि च दानानि हरिद्राख्यानदीतटे ॥२३॥

एकैकं कोटिगुणितं फलं भवति निश्चयः ।
पूर्णिमायाममायाञ्च ग्रहणे चन्द्रसूर्ययोः ॥२४॥

हरिद्राख्यानदीस्नानमश्वमेधायुतं फलम् ।
पुष्पानि च सुगन्धीनि कस्तूरीहरिचन्दनन् ॥२५॥

गोरोचनञ्च कर्पूरं माघान्ते दानमाचरेत् ।
मासे स्नातुमशक्तश्चेत्स्नात्वा त्रिदिनमेव च ॥२६॥

माघप्रयुक्तदानानि तीर्थतीरे समाचरेत् ।
तेनैव सकलं पुण्यं संप्राप्नोति न संशयः ॥२७॥

पौराणिकाय दातव्यं हस्तकर्णविभूषणम् ।
सुगन्धितं वस्त्रयुग्मं कौसुम्भेन च रंजितम् ॥२८॥

अथवा हरिद्रलिप्तञ्च नानावर्णमथापि वा ।
पुराणान्ते पूजयित्वा बदरीफलपूर्वकम् ॥२९॥

आशीर्वादं च लब्ध्वा तु कृतार्थो भवति ध्रुवम् ।
अन्येष्वपि च तीर्थेषु स्नानमेवं समाचरेत् ॥३०॥

दद्याद्दानानि सर्वत्र कृष्णः प्रीतो भवत्विति ।
नो चेदशक्त एकत्र कुर्याद्वित्तानुसारतः ॥३१॥

दातव्यं च प्रयत्नेन शून्यन्नैव तु कारयेत् ।
माघस्नानाय सर्वत्र सन्ति तीर्थानि भूतले ॥३२॥

तथापि चम्पकारण्ये हरिद्राख्यानदीजले ।
स्नानं विशिष्टं सर्वेषां पुण्यमत्यन्तपावनम् ॥३३॥

कृष्णगोपीजलक्रीडाहरिद्राकुङ्कुमाङ्किता ।
आणदतलसंयुक्ता हरिद्राख्या महानदी ॥३४॥

तेनाधिकाभवत्पुण्या सर्वेषमुत्तमोत्रमा ।
माघस्नानं ततोऽस्यां तु विशिष्टं सर्वदेहिनाम् ॥३५॥

हरिद्राख्यानदीस्नानात्पूतायास्यन्ति सद्गतिम् ।
पादाङ्गुष्ठेन संसर्गा गङ्गा भागीरथी नदी ॥३६॥

सर्वाङ्गस्पर्शपूतांगी तस्मादेषा परा यतः ।
अकाले वापि काले वा यो वा को वा नरो भुवि ॥३७।

स्नातश्चेत्पापनिर्मुक्तो भवत्येव च तत्क्षणे ।
हरिद्राख्यानदीं यास्ये स्नानायेति स्वमन्दिरात् ॥३८॥

पदमात्रं ततो यस्तु सोऽश्वमेधफलं लभेत् ।
शताश्वमेधजं पुण्यं स्नानमात्रेण लभ्यते ॥३९॥

अस्य पुण्यस्य सदृशं न भूतं न भविष्यति ।
चैत्रमासे सिते पक्षे चित्रायां पूर्णिमादिने ॥४०॥

मालां चम्पकपुष्पैश्च रचयित्वा मनोहरम् ।
रात्रौ समर्पयेद्यस्तु तत्पुण्यान्तो न विद्यते ॥४१॥

मालां समर्प्य तत्काले परमान्नं निवेद्य च ।
शङ्खचक्रधरो भूत्वा वैकुण्ठे निवसेद्ध्रुवम् ॥४२॥

वैशाखमासे संप्राप्ते राजगोपालनायकम् ।
नन्दिवर्धनमालाभिरलङ्कारं करोति यः ॥४३॥

समर्प्य चन्दनं पादे कृत्वा चैव नमस्क्रियाम् ।
सीतारिं धूपयित्वा च सिंहासनपतिर्भवेत् ॥४४॥

पितृवंश्यान्मातृवंश्यानुद्धृत्य नरकार्णवात् ।
तैरेव सहितो भूत्वा नागारिकृतकेतनः ॥४५॥

सारूप्यपदवीं प्राप्य तत्रैव रमते सुखम् ।
गोपालस्य रथस्थस्य यस्तु मल्लिकमालिकाम् ॥४६॥

समर्पयति दिव्याश्च हरिरेव न संशयः ।
ध्वजारोहणमारभ्य यावच्च रथचारणम् ॥४७॥

द्वारकायामन्नदानं ये कुर्वन्ति नरोत्तमाः ।
ते पुत्रपौत्रैस्सहिता विष्णुलोकं प्रयान्ति वै ॥४८॥

तत्सन्निधौ महादीपानारोपयति यो नरः ।
दीपं दीपद्वयं वापि तैलेनाज्येन वा पुनः ॥४९॥

इह साम्राज्यतां प्राप्य देहान्ते यान्ति तत्पदम् ।
जीर्णालयं तु कालेन जीर्णोद्धारं करोति यः ॥५०॥

सुधाधवलितं वापि विष्णुना सह मोदते ।
कार्पासं पट्टजं वापि ऊर्णातन्तुसमुद्भवम् ॥५१॥

कौसुम्भरञ्जितं कृत्वा गोपालस्य च योऽर्पयेत् ।
तन्तुसंख्याकवर्षाणि वैकुण्ठे वसति ध्रुवम् ॥५२॥

रथचर्यां यः करोति काले काले च शास्त्रतः ।
अङ्कुरश्च समारभ्य यावत्तीर्थदिनावधि ॥५३॥

ध्वजदण्डैर्दीपिकाभिर्ढक्काकाहलवाद्यकैः ।
भेरीमृदङ्गशब्दैश्च वीथ्यामुत्सवकर्मणा ॥५४॥

कृत्वोत्सवं भृगुः पूर्वं गोपालस्य कृपानिधेः ।
लब्ध्वा च दर्शनं चास्य दक्षिणद्वारकास्थले ॥५५॥
हरिद्राख्यानदीतीरे कृत्वावभृथमेव च ।
तान्त्रिकेणैव मार्गेण वैष्णवाचार्यपुंगवैः ॥५६॥
देवं संपादयित्वा च साक्षाच्छ्रीकृष्णनामकम् ।
अज्ञानाच्छापदोषाच्च कृष्णगोपाच्च मुक्तवान् ।
ब्रह्मण्यो देवदेवोऽपि दत्वा दर्शनमेव च ॥५७॥
भक्तानुग्रहणार्थाच्च तत्रैव परिनिष्ठितः ।
कथैषा पूर्वमेवोक्ता भृगुशापसमुद्भवा ॥५८॥
तस्मादेतत्क्षेत्रसमं न भूतं न भविष्यति ।

शौनकः—

कथं गोप्रलयो नाम विद्वानत्र समागतः ।
श्रीकृष्णदर्शनं प्राप मुक्तिमाप सबन्धुभिः ॥५९॥

सूतः—

स्थानान्तरेषु बहुशस्तपः कृत्वा द्विजोत्तमः ।
अनवाप्तं तपःपूरं कावेरीमाप्तवान्पराम् ॥६०॥
दुःखान्वितो रुदन्दैवान्नारदश्च प्रदृष्टवान् ।
तं दृष्ट्वा संप्रणम्याथ तूष्णीमेवाग्रतः स्थितः ॥६१॥
नारदस्तस्य वृत्तान्तं ज्ञात्वा च ज्ञानचक्षुषा ।
निर्मार्ज्य चक्षुषी तस्य वाक्यमेतदुवाच ह ॥६२॥

नारद :—

गोप्रलय शृणु मे तत्वं मदुक्तवचनं कुरु ।
गत्वा च चम्पकारण्यं साग्निहोत्रो यथाविधि ॥६३॥
तपः कुरुष्व मुनिभिः तत्र ते दर्शनं विभुः ।
प्रसन्नश्च ददात्येव गोपगोपीसमन्वितः ॥६४॥

उपदिश्याथ मन्त्रं च नात्र सन्देहकारणम् ।
एवं नादशवाक्येन गत्वा स्थानमनुत्तमम् ॥६५॥
तपः कृत्वा भगवतो दर्शनं प्राप्तवान्परम् ।
एतद्धोमलयाख्यस्य चरितं पावनं परम् ॥६६॥
संग्रहेण मयाख्यातं सर्वसौभाग्यदायकम् ।
चैत्रमास्यपरे पक्षे यदा सूर्येन्दुसङ्गमः ॥६७॥
तदा प्रातस्समुत्थाय कृतपूर्वाह्निकक्रियः ।
यः स्नाति होमतीर्थे च तद्विष्णोरिति मंत्रतः ॥६८॥
स कोटिकुलमुद्धृत्य विष्णुलोके महीयते ।
देवस्य गोपीनाथस्य गोपैः परिवृतस्य च ॥६९॥
कृत्वा पूजां यथाशक्ति वस्त्रालङ्कारभूषणैः ।
मुच्यते क्षेत्रमाहात्म्याद्वैकुण्ठाप्रियदर्शनात् ॥७०॥

भूलोकवैकुण्ठमिदं पुरातनं
समस्तपापौघनिवारणञ्च ।
अन्नोदकानां च तु संप्रदानात्
कदाचिदप्यत्र फलं समञ्च ॥७१॥
अन्नं जलं वस्त्रमहिप्रदानं
गवां प्रदानं धनधान्यदानम् ।
पात्रे विशेषेण च दानसिद्धि
र्भविष्यति ब्राह्मणपुंगवेषु ॥७२॥

ये केचनात्र कुर्वन्ति देवकैङ्कर्यमत्र तु ।
स्ववित्तस्यानुसारेण सर्वसंपत्समृद्धये ॥७३॥
श्रीगोपदेवराजस्य महत्त्वञ्च प्रयान्ति च ।
स कोटिकुलसंयुक्तः पदं प्राप्नोति वैष्णवम् ॥७४॥
धनुर्मासे माघमासे कार्तिके च तथैव च ।
महापूजाञ्च कृत्वा च सोऽनन्तफलमश्नुते ॥७५॥

पणं पणद्वयञ्चापि काचमात्रमथापि वा ।
ददाति देवपादे च बलीरूपी हरेर्दिने ॥७६॥
द्वादश्यां वा विशेषेण सारूप्यं लभते नरः ।
यद्यदिष्टतमं वस्तु पितृनुद्दिश्य योऽर्चयेत् ॥७७॥
पितरस्तस्य वैकुण्ठे वसन्ति हि न संशयः ।
एवं ब्रह्मा नारदाय स तु मद्गुरवेऽप्यदात् ॥७८॥
गुरुर्मम शुकायादात्सोऽहं युष्माकमत्र तु ।
प्रोक्तवान्वैभवं सर्वं शिष्येभ्य एव च ॥७९॥
वदध्वं सर्वलोकनां पारम्पर्यक्रमेण च ।
पुराणमेतदाद्यन्तं श्लोकं श्लोकार्धमेव वा ॥८०॥
लिखित्वा पूजयेद्यस्तु गन्धपुष्पादिभिर्नरः ।
तन्मन्दिरञ्च वैकुण्ठं श्वेतद्वीपं च वैष्णवम् ॥८१॥
मधुरा द्वारका चेति वक्ष्यन्ते ब्रह्मवादिनः ।
बहुनात्र किमुक्तेन वयं यूयं सुमेधसः ॥८२॥
अनन्तसुखयुक्ताश्च भवेयुर्हरिवल्लभाः ॥८३॥

इति श्रीब्रह्माण्डपुराणे विष्णुक्षेत्रखण्डे
उत्तर भागे चंपकारण्यमाहात्म्ये
हरिद्रानदी माघस्नानानु
वर्णनं नामाष्ट
षष्टितमोऽध्यायः ॥

श्री राजगोपालार्पणमस्तु ॥

---